स्पर्शमनुद्भूतरूपमुद्भूतस्पर्शमुद्भूतरूपमनुद्भूतस्पर्शं चेति। उद्भूतरूपस्पर्शं यथा सौरादितेजः पिण्डीभूतं तेजो वह्न्यादिकम्। सुवर्णं तु उद्भूताभिभूतरूपस्पर्शं तदनुद्भूतरूपत्वेऽचाक्षुपं स्यादनुद्भूतस्पर्शत्वे त्वचा न गृह्येत। अभिभवस्तु बलवत्सजातीयेन पार्थिवरूपेण स्पर्शेन च कृतः। अनुद्भूतरूपस्पर्शं तेजो यथा चक्षुरिन्द्रियम्। अनुद्भूतरूपमुद्भूतस्पर्शं यथा तप्तवारिस्थं तेजः। उद्भूतरूपमनुद्भूतस्पर्शं यथा प्रदीपप्रभामण्डलम्।

वायुत्वाभिसंबन्धवान् वायुः। त्वगिन्द्रियप्राणवातादिप्रभेदः। स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगवान्। स च स्पर्शाद्यनुमेयः। तथाहि योऽयं वायौ वाति अनुष्णाशीतस्पर्श उपलभ्यते स गुणत्वाद् गुणिनमन्तरेणानुपपद्यमानो गुणिनमनुमापयति। गुणी च वायुरेव। पृथिव्याद्यनुपलब्धेः। वायुपृथिवीव्यतिरेकेण अनुष्णाशीतस्पर्शाभावात्। स च द्विविधो नित्यानित्यभेदात्। नित्यः परमाणुरूपो वायुरनित्यः कार्यरूप एव।

तत्र पृथिव्यादीनां चतुर्णां कार्यद्रव्याणामुत्पत्तिविनाशक्रमः कथ्यते। द्वयोः परमाण्वोः क्रियया संयोगे सति द्व्यणुकमुत्पद्यते। तस्य परमाणू समवायिकारणम्। तत्संयोगोऽसमवायिकारणम्। अदृष्टादि निमित्तकारणम्। ततो द्व्यणुकानां त्रयाणां क्रियया संयोगे सति त्र्यणुकमुत्पद्यते। तस्य द्व्यणुकानि समवायिकारणम्। शेषं पूर्ववत्। एवं त्र्यणुकैश्चतुर्भिश्चतुरणुकम्। चतुरणुकैरपरं स्थूलतरं स्थूलतरैरपरं स्थूलतमम्। एवं क्रमेण महापृथिवी महत्य आपो महत्तेजो महांश्च वायुरुत्पद्यते। कार्यगता रूपादयः स्वाश्रयसमवायिकारणगतेभ्यो रूपादिभ्यो जायन्ते। कारणगुणा हि कार्यगुणानारभन्त इति न्यायात्। इत्थमुत्पन्नस्य रूपादिमतः कार्यद्रव्यस्य घटादेरवयवेषु कपालादिषु नोदनादभिघाताद्वा क्रिया जायते। तया विभागस्तेनावयव्यारम्भकस्यासमवायिकारणीभूतस्य, संयोगस्य नाशः क्रियते ततः कार्यद्रव्यस्य घटादेरवयविनो नाशः। एतेनावयव्यारम्भकासमवायिकारणनाशे द्रव्यनाशो दर्शितः। क्वचित् समवायिकारणनाशे द्रव्यनाशो यथा पूर्वोक्तस्यैव पृथिव्यादेः संहारे संजिहीर्षोर्महेश्वरस्य संजिहीर्षा जायते ततो द्व्यणुकारम्भकेषु परमाणुषु क्रिया तया विभागस्ततस्तयोः संयोगनाशे सति द्व्यणुकेषु नष्टेषु स्वाश्रयनाशात् त्र्यणुकादिनाश एवं क्रमेण पृथिव्यादिनाशः। यथा

वा तन्तूनां नाशे पटनाशः । तद्गतानां रूपादीनां स्वाश्रयनाशेनैव नाशः । अन्यत्र तु सत्येवाश्रये विरोधिगुणप्रादुर्भावेण विनाशः । यथा पाकेन घटादौ रूपादिनाश इति ।

किं पुनः परमाणुसद्भावे प्रमाणम् ।

उच्यते । यदिदं जालं सूर्यमरीचिस्थं सर्वतः सूक्ष्मतमं रज उपलभ्यते तत् स्वल्पपरिमाणद्रव्यारब्धं कार्यद्रव्यत्वाद् घटवत् । तच्च द्रव्यं कार्यमेव महद्द्रव्यारम्भकस्य कार्यत्वनियमात् । तदेवं द्व्यणुकाख्यं द्रव्यं सिद्धम् । तदपि स्वल्पपरिमाणसमवायिकारणारब्धं कार्यद्रव्यत्वाद् घटवत् । यस्तु द्व्यणुकारम्भकः स एव परमाणुः स चानारब्ध एवेति ।

ननु कार्यद्रव्यारम्भकस्य कार्यद्रव्यत्वाव्यभिचारात् तस्य कथमनारब्धत्वम् ।

उच्यते । अनन्तकार्यपरंपरादोषप्रसङ्गात् । तथा च सत्यनन्तद्रव्यारब्धत्वाविशेषेण मेरुसर्षपयोरपि तुल्यपरिमाणत्वप्रसङ्गः । तस्मादनारब्ध एव परमाणुः । द्व्यणुकं तु द्वाभ्यामेव परमाणुभ्यामारभ्यत एकस्यानारम्भकत्वात् त्र्यादिकल्पनायां प्रमाणाभावात् । त्र्यणुकं तु त्रिभिरेव द्व्यणुकैरारभ्यत एकस्यानारम्भकत्वात् । द्वाभ्यामारम्भे कार्यगुणमहत्त्वानुपपत्तिप्रसङ्गात् । कार्ये हि महत्त्वं कारणमहत्त्वाद्वा कारणबहुत्वाद्वा । तत्र प्रथमस्यासंभवाद्बहुत्वमेषितव्यम् । न च चतुरादिकल्पनायां प्रमाणमस्ति त्रिभिरेव महत्त्वारम्भोपपत्तेरिति ।

शब्दगुणमाकाशम् । शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागवत् एकं विभु नित्यं च । शब्दलिङ्गकं च ।

शब्दलिङ्गकत्वमस्य कथम् ।

परिशेषात् । प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गात् परिशिष्यमाणे संप्रत्ययः परिशेषः । तथाहि शब्दस्तावद् विशेषगुणः सामान्यवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वाद् रूपादिवत् । गुणश्च गुण्याश्रित एव । न चास्य पृथिव्यादिचतुष्टयमात्मा च गुणी भवितुमर्हति श्रोत्रग्राह्यत्वाच्छब्दस्य । ये हि पृथिव्यादीनां गुणा न ते श्रोत्रेन्द्रियेण गृह्यन्ते यथा रूपादयः शब्दस्तु श्रोत्रेण गृह्यते । न दिक्कालमनसां गुणः विशेषगुणत्वात् । अत एभ्योऽष्ट-

भ्योऽतिरिक्तः शब्दगुणी एषितव्यः। स एवाकाश इति। स चैको भेदे प्रमाणाभावादेकत्वेनैवोपपत्तेः। एकत्वाच्चाकाशत्वं नाम सामान्यमाकाशे न विद्यते सामान्यस्यानेकवृत्तित्वात्। विभु चाकाशम्। परममहत्परिमाणमित्यर्थः। सर्वत्र तत्कार्योपलब्धेः। अत एव विभुत्वान्नित्यमिति।

कालोऽपि दिग्विपरीतपरत्वापरत्वानुमेयः। संख्यापरिमाणपृथक्त्वसंयोगविभागवान्। एको नित्यो विभुश्च।

कथमस्य दिग्विपरीतपरत्वापरत्वानुमेयत्वम्।

उच्यते। संनिहिते वृद्धे संनिधानादपरत्वार्हे तद्विपरीतं परत्वं प्रतीयते। व्यवहिते यूनि व्यवधानात् परत्वार्हे तद्विपरीतमपरत्वम्। तदिदं तत्तद्विपरीतपरत्वमपरत्वं च कार्यं तत्कारणस्य दिगादेरसंभवात् कालमेव कारणमनुमापयति।

स चैकोऽपि वर्तमानातीतभविष्यत्क्रियोपाधिवशाद् वर्तमानादिव्यपदेशं लभते पुरुष इव पच्यादिक्रियोपाधिवशात् पाचकपाठकादिव्यपदेशम्। नित्यत्वविभुत्वे चास्य पूर्ववत्।

कालविपरीतपरत्वापरत्वानुमेया दिगेका नित्या विभ्वी च। संख्यापरिमाणपृथक्त्वसंयोगविभागगुणवती। पूर्वादिप्रत्ययैरनुमेया। तेषामन्यनिमित्तासंभवात्। पूर्वस्मिन् पश्चिमे वा देशे स्थितस्य वस्तुनस्तादवस्थ्यात्। सा चैकापि सवितुस्तत्तद्देशसंयोगोपाधिवशात् प्राच्यादिसंज्ञां लभते।

आत्मत्वाभिसंबन्धवानात्मा। सुखदुःखादिवैचित्र्यात् प्रतिशरीरं भिन्नः। स चोक्त एव। तस्य सामान्यगुणाः संख्यादयः पञ्च बुद्ध्यादयो नव विशेषगुणाः। नित्यत्वविभुत्वे पूर्ववत्।

मनस्त्वाभिसंबन्धवन्मनः। अण्वात्मसंयोग्यन्तरिन्द्रियम्। सुखाद्युपलब्धिकरणं नित्यं च संख्याद्यष्टगुणवत्। तत्संयोगेन बाह्येन्द्रियमर्थग्राहकम्। अत एव सर्वोपलब्धिसाधनम्। तच्च न प्रत्यक्षमपि त्वनुमानगम्यम्। तथाहि सुखाद्युपलब्धयश्चक्षुराद्यतिरिक्तकरणसाध्या असत्स्वपि चक्षुरादिषु जायमानत्वात्। यद्वस्तु यद्विनैवोत्पद्यते तत्तदतिरिक्तकरणसाध्यं यथा कुठारं विनोत्पद्यमाना पचनाक्रिया तदतिरिक्तवह्न्यादिकरणसाध्या। यच्च करणं तन्मनः। तच्च चक्षुराद्यतिरिक्तम्। तच्चाणु परिमाणम्। इति द्रव्याण्युक्तानि।

## गुणाः।

अथ गुणा उच्यन्ते। सामान्यवानसमवायिकारणमस्पन्दात्मा गुणः। स च द्रव्याश्रित एव। रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारभेदाच्चतुर्विंशतिधा।

तत्र रूपं चक्षुर्मात्रग्राह्यो विशेषगुणः। पृथिव्यादित्रयवृत्ति। तच्च शुक्लाद्यनेकप्रकारकम्। पाकजं च पृथिव्याम्। तच्चानित्यं पृथिवीमात्रे। आप्यतैजसपरमाण्वोर्नित्यम्। आप्यतैजसकार्येष्वनित्यम्। शुक्लभास्वरमपाकजं तेजसि। तदेवाभास्वरमप्सु।

रसो रसनेन्द्रियग्राह्यो विशेषगुणः। पृथिवीजलवृत्तिः। तत्र पृथिव्यां मधुरादिषट्प्रकारो मधुराम्ललवणकटुकषायतिक्तभेदात् पाकजश्च। अप्सु मधुरोऽपाकजो नित्योऽनित्यश्च। नित्याः परमाणुभूतास्वप्सु। कार्यभूतास्वनित्यः।

गन्धो घ्राणग्राह्यो विशेषगुणः पृथिवीमात्रवृत्तिः। अनित्य एव। स द्विविधः सुरभिरसुरभिश्च। जलादौ गन्धप्रतिभानं तु संयुक्तसमवायेन द्रष्टव्यम्।

स्पर्शस्त्वगिन्द्रियग्राह्यो विशेषगुणः। पृथिव्यादिचतुष्टयवृत्तिः। स च त्रिविधः शीतोष्णानुष्णाशीतभेदात्। शीतः पयसि। उष्णस्तेजसि। अनुष्णाशीतः पृथिवीवाय्वोः। पृथिवीमात्रे ह्यनित्यः। आप्यतैजसवायवीयपरमाणुषु नित्यः। आप्यादिकार्येष्वनित्यः। एते च रूपादयश्चत्वारो महत्त्वैकार्थसमवेतत्वे सत्युद्भूता एव प्रत्यक्षाः।

संख्या एकत्वादिव्यवहारहेतुः सामान्यगुणः। एकत्वादिपरार्द्धपर्यन्ता। तत्रैकत्वं द्विविधं नित्यानित्यभेदात्। नित्यगतं नित्यमनित्यगतमनित्यम्। स्वाश्रयसमवायिकारणगतैकत्वजन्यं च। द्वित्वं चानित्यमेव। तच्च द्वयोः पिण्डयोरिदमेकमिदमेकमित्यपेक्षाबुद्ध्या जन्यते। तत्र द्वौ पिण्डौ समवायिकारणे। पिण्डयोरेकत्वेऽसमवायिकारणे। अपेक्षाबुद्धिर्निमित्तकारणम्। अपेक्षाबुद्धिनाशादेव द्वित्वविनाशः। एवं त्रित्वाद्युत्पत्तिर्विज्ञेया।

परिमाणं मानव्यवहारासाधारणं कारणम्। तच्चतुर्विधम्। अणु महद् दीर्घं ह्रस्वं चेति। तत्र कार्यगतं परिमाणं संख्यापरिमाणप्रचययोनि।

तद्यथा व्यणुकपरिमाणमीश्वरापेक्षाबुद्धिजन्यपरमाणुद्वित्वजनितत्वात् संख्यायोनि। संख्याकारणकमित्यर्थः। त्र्यणुकपरिमाणं च स्वाश्रयसमवायिकारणगतबहुत्वसंख्यायोनि। चतुरणुकादिपरिमाणं तु स्वाश्रयसमवायिकारणपरिमाणजन्यम्। तूलपिण्डपरिमाणं तु स्वाश्रयसमवायिकारणावयवानां प्रशिथिलसंयोगजन्यम्। परमाणुपरिमाणं परममहत्परिमाणं चाकाशादिगतं नित्यमेव।

पृथक्त्वं पृथग्व्यवहारासाधारणं कारणम्। तच्च द्विविधम्। एकपृथक्त्वं द्विपृथक्त्वादिकं च। तत्राद्यं नित्यगतं नित्यमनित्यगतमनित्यम्। द्विपृथक्त्वादिकं चानित्यमेव।

संयोगः संयुक्तव्यवहारहेतुर्गुणः। स द्व्याश्रयोऽव्याप्यवृत्तिश्च। स त्रिविधः। अन्यतरकर्मज उभयकर्मजः संयोगजश्चेति। तत्रान्यतरकर्मजो यथा क्रियावता श्येनेन सह निष्क्रियस्य स्थाणोः संयोगः। अस्य हि श्येनक्रिया असमवायिकारणम्। उभयकर्मजो यथा सक्रिययोर्मल्लयोः संयोगः। संयोगजो यथा कारणाकारणसंयोगात् कार्याकार्यसंयोगः। यथा हस्ततरुसंयोगेन कायतरुसंयोगः।

विभागोऽपि विभक्तप्रत्ययहेतुः। संयोगपूर्वको द्व्याश्रयः। स च त्रिविधोऽन्यतरकर्मज उभयकर्मजो विभागजश्चेति। तत्र प्रथमो यथा श्येनक्रियया शैलश्येनयोर्विभागः। द्वितीयो यथा मल्लयोर्विभागः। तृतीयो यथा हस्ततरुविभागात् कायतरुविभागः।

परत्वापरत्वे परापरव्यवहारासाधारणकारणे। ते तु द्विविधे दिक्कृते कालकृते च। तत्र दिक्कृतयोरुत्पत्तिः कथ्यते। एकस्यां दिश्यवस्थितयोः पिण्डयोरिदमस्मात् संनिकृष्टमितिबुद्ध्यानुगृहीतेन दिक्पिण्डसंयोगेनापरत्वं संनिकृष्टे जन्यते। विप्रकृष्टबुद्ध्या तु परत्वं विप्रकृष्टे जन्यते। संनिकर्षस्तु पिण्डस्य द्रष्टुः शरीरापेक्षया संयुक्तसंयोगाल्पीयस्त्वम्। तद्भूयस्त्वं विप्रकर्ष इति।

कालकृतयोस्तु परत्वापरत्वयोरुत्पत्तिः कथ्यते। अनियतदिगवस्थितयोर्युवस्थविरपिण्डयोरयमस्मादल्पतरकालसंबद्ध इत्यपेक्षाबुद्ध्यानुगृहीतेन का-

लपिण्डसंयोगेनासमवायिकारणेन यूनि अपरत्वम् । अयमस्माद् बहुतरकालेन संबद्ध इति धिया स्थविरे परत्वम् ।

गुरुत्वमाद्यपतनासमवायिकारणम् । पृथिवीजलवृत्ति । यथोक्तम् । संयोगवेगप्रयत्नाभावे सति गुरुत्वात् पतनमिति ।

द्रवत्वमाद्यस्यन्दनासमवायिकारणम् । भूतेजोजलवृत्ति । भूतेजसोर्घृतादिसुवर्णयोरग्निसंयोगेन द्रवत्वं नैमित्तिकम् । जले नैसर्गिकं द्रवत्वम् ।

स्नेहश्चिक्कणता । जलमात्रवृत्तिः कारणगुणपूर्वको गुरुत्वादिवद् यावद्द्रव्यभावी ।

शब्दः श्रोत्रग्राह्यो गुणः । आकाशस्य विशेषगुणः ।

ननु कथमस्य श्रोत्रेण ग्रहणम् । यतो भेर्यादिदेशे शब्दो जायते श्रोत्रं तु पुरुषदेशेऽस्ति ।

सत्यम् । भेरीदेशे जातः शब्दो वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा संनिहितं शब्दान्तरमारभते स च शब्दः शब्दान्तरमिति क्रमेण श्रोत्रदेशे जातोऽन्त्यः शब्दः श्रोत्रेण गृह्यते न त्वाद्यो नापि मध्यमः । एवं वंशे पाट्यमाने दलद्वयविभागदेशे जातः शब्दः शब्दान्तरारम्भक्रमेण श्रोत्रदेशेऽन्त्यं शब्दं जनयति सोऽन्त्यः शब्दः श्रोत्रेण गृह्यते नाद्यो न मध्यमः । भेरीशब्दो मया श्रुत इति मतिस्तु भ्रान्तैव ।

भेरीशब्दोत्पत्तौ भेर्याकाशसंयोगोऽसमवायिकारणम् । भेरीदण्डसंयोगो निमित्तकारणम् । एवं वंशोत्पाटनाच्चटचटाशब्दोत्पत्तौ वंशदलाकाशविभागोऽसमवायिकारणम् । दलद्वयविभागो निमित्तकारणम् । इत्थमाद्यः शब्दः संयोगजो विभागजो वा । अन्त्यमध्यमशब्दास्तु शब्दासमवायिकारणका अनुकूलवातनिमित्तकारणकाः । यथोक्तम् । संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिरिति । आद्यादीनां सर्वशब्दानामाकाशमेकमेव समवायिकारणम् । कर्मबुद्धिवत्त्रिक्षणावस्थायित्वम् । तत्राद्यमध्यमशब्दाः कार्यशब्दनाश्याः अन्त्यस्तूपान्त्येन उपान्त्यस्त्वन्त्येन सुन्दोपसुन्दन्यायेन विनश्येते । इदं त्वयुक्तम् । उपान्त्येन त्रिक्षणावस्थायिनान्त्यस्य द्वितीयक्षणमात्रानुगामिना तृतीयक्षणे चासतान्त्यनाशनासंभवात् । तस्मादुपान्त्यनाशादेवान्त्यनाश इति ।

विनाशित्वं च शब्दस्यानुमानात् । तथाहि । अनित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वाद् घटवदिति । शब्दस्यानित्यत्वं साध्यमनित्यत्वं च विनाशावच्छिन्नस्वरूपत्वं न तु विनाशावच्छिन्नसत्तायोगित्वं प्रागभावे सत्ताहीनेऽनित्यत्वाभावप्रसङ्गात् । सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वं हेतुः । इन्द्रियग्राह्यत्वादित्युच्यमान आत्मनि व्यभिचारः स्यादत उक्तं बाह्येति । एवमपि तेनैव योगिबाह्येन्द्रियेण ग्राह्ये परमाण्वादौ व्यभिचारः स्यादतो योगिनिरासार्थमुक्तमस्मदादीति ।

किं पुनर्योगिसद्भावे प्रमाणम् ।

उच्यते । परमाणवः कस्यचित् प्रत्यक्षाः प्रमेयत्वाद् घटवदिति ।

तथापि सामान्यादिना व्यभिचारोऽत उक्तं सामान्यवत्त्वे सतीति । सामान्यादित्रयस्य निःसामान्यत्वात् ।

अर्थप्रकाशो बुद्धिः । नित्या अनित्या च । ऐशी बुद्धिर्नित्या अन्यदीया त्वनित्या ।

प्रीतिः सुखम् । तच्च सर्वात्मनामनुकूलवेदनीयम् ।

पीडा दुःखम् । तच्च सर्वात्मनां प्रतिकूलवेदनीयम् ।

राग इच्छा ।

क्रोधो द्वेषः ।

उत्साहः प्रयत्नः ।

बुद्ध्यादयः षण् मानसप्रत्यक्षाः ।

धर्माधर्मौ सुखदुःखयोरसाधारणकारणे । तौ चाप्रत्यक्षावप्यागमगम्यावनुमानगम्यौ च । तथाहि देवदत्तस्य शरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तस्य भोगहेतुत्वाद् देवदत्तप्रयत्नजन्यवस्तुवत् । यश्च शरीरादिजनक आत्मविशेषगुणः स एव धर्मोऽधर्मश्च । प्रयत्नादीनां शरीराद्यजनकत्वादिति ।

संस्कारस्त्रिविधो वेगो भावना स्थितिस्थापकश्च । तत्र वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः । स च क्रियाहेतुः । भावनाख्यस्तु संस्कार आत्ममात्रवृत्तिरनुभवजन्यः स्मृतिहेतुः । स चोद्बुद्ध एव स्मृतिं जनयति । उद्बोधश्च

सहकारिलाभः । सहकारिणश्च संस्कारस्य सदृशदर्शनादयः । यथोक्तम् । सादृश्यादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका इति । स्थितिस्थापकस्तु स्पर्शवद्द्रव्यविशेषवृत्तिः । अन्यथाभूतस्य स्वाश्रयस्य धनुरादेः पुनस्तादवस्थ्यापादकः ।

एते च बुद्ध्यादयोऽधर्मान्ता भावना चात्मविशेषगुणाः ।

गुणा उक्ताः ।

कर्माण्युच्यन्ते । चलनात्मकं कर्म । गुण इव द्रव्यमात्रवृत्ति । अविभुद्रव्यपरिमाणेन मूर्तत्वापरनाम्ना सहैकार्थसमवेतं विभागद्वारा पूर्वसंयोगनाशे सत्युत्तरदेशसंयोगहेतुश्च । तच्च उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात् पञ्चविधम् । भ्रमणादयस्तु गमनग्रहणेनैव गृह्यन्ते ।

अनुवृत्तिप्रत्ययहेतुः सामान्यम् । द्रव्यादित्रयवृत्ति । नित्यमेकमनेकानुगतं च । तच्च द्विविधं परमपरं च । परं सत्ता बहुविषयत्वात् । सा चानुवृत्तिप्रत्ययमात्रहेतुत्वात् सामान्यमात्रम् । अपरं द्रव्यत्वादि । अल्पविषयत्वात् । तच्च व्यावृत्तेरपि हेतुत्वात् सामान्यं सद् विशेषः । अत्र कश्चिदाह । व्यक्तिव्यतिरिक्तं सामान्यं नास्तीति । तत्र वयं ब्रूमः । किमालम्बना तर्हि भिन्नेषु विलक्षणेषु पिण्डेष्वेकाकारा बुद्धिर्विना सर्वानुगतमेकं यच्च तदालम्बनं तदेव सामान्यमिति । ननु तस्यातद्व्यावृत्तिकृतैवैकाकारा बुद्धिरस्तु । तथाहि सर्वेष्वेव हि गोपिण्डेषु अगोभ्योऽश्वादिभ्यो व्यावृत्तिरस्ति । तेनागोव्यावृत्तिविषय एवायमेकाकारः प्रत्ययोऽनेकेषु न तु विधिरूपगोत्वसामान्यविषयः । मैवम् । विधिमुखेनैवैकाकारस्फुरणात् ।

विशेषो नित्यो नित्यद्रव्यवृत्तिः । व्यावृत्तिबुद्धिमात्रहेतुः । नित्यद्रव्याणि त्वाकाशादीनि पञ्च । पृथिव्यादयश्चत्वारः परमाणुरूपाः ।

अयुतसिद्धयोः संबन्धः समवायः स चोक्त एव ।

नन्ववयवावयविनावप्ययुतसिद्धौ तेन तयोः संबन्धः समवाय इत्युक्तम् । न चैतद्युक्तमवयवातिरिक्तस्यावयविनोऽभावात् । परमाणव एव बहवस्तथाभूताः संनिकृष्टा घटोऽयं घटोऽयमिति गृह्यन्ते ।

अत्रोच्यते । अस्त्येकः स्थूलो घट इति प्रत्यक्षा बुद्धिः । न च सा परमाणुष्वनेकेष्वस्थूलेष्वतीन्द्रियेषु भवितुमर्हति । भ्रान्तेयं बुद्धिरिति चेत् । न । बाधकाभावात् ।

तदेवं षट् पदार्था द्रव्यादयो वर्णिताः। ते च विधिमुखप्रत्ययवेद्यत्वाद् भावरूपा एव।

इदानीं निषेधमुखप्रमाणगम्योऽभावरूपः सप्तमः पदार्थः प्रतिपाद्यते। स चाभावः संक्षेपतो द्विविधः। संसर्गाभावोऽन्योन्याभावश्चेति। संसर्गाभावोऽपि त्रिविधः प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावश्चेति।

उत्पत्तेः प्राक् कारणे कार्यस्याभावः प्रागभावः। यथा तन्तुषु पटाभावः। स चानादिरुत्पत्तेरभावात्। विनाशी च कार्यस्यैव तद्विनाशरूपत्वात्।

उत्पन्नस्य कारणेऽभावः प्रध्वंसाभावः। प्रध्वंसो विनाश इति यावत्। यथा भग्ने घटे कपालमालायां घटाभावः। स च मुद्गरप्रहारादिजन्यः। स चोत्पत्तिमानप्यविनाशी नष्टस्य कार्यस्य पुनरनुत्पत्तेः।

त्रैकालिकोऽभावोऽत्यन्ताभावः। यथा वायौ रूपाभावः।

अन्योन्याभावस्तु तादात्म्यप्रतियोगिकोऽभावः। घटः पटो न भवतीति।

तदेवमर्था व्याख्याताः।

ननु ज्ञानाद् ब्रह्मणो वा अर्था व्यतिरिक्ता न सन्ति। मैवम्। अर्थानामपि प्रत्यक्षादिसिद्धत्वेनाशक्यापलापत्वात्।

बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इत्यादिभिः पर्यायशब्दैर्याभिधीयते सा बुद्धिः। अर्थप्रकाशो वा बुद्धिः। सा च संक्षेपतो द्विविधा। अनुभवः स्मरणं च। अनुभवोऽपि द्विविधो यथार्थोऽयथार्थश्चेति।

तत्र यथार्थोऽर्थाविसंवादी। स च प्रत्यक्षादिप्रमाणैर्जन्यते। यथा चक्षुरादिभिरदुष्टैर्घटादिज्ञानम्। धूमलिङ्गकमग्निज्ञानम्। गोसादृश्यदर्शनाद् गवयशब्दवाच्यताज्ञानम्। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिवाक्याज् ज्योतिष्टोमस्य स्वर्गसाधनताज्ञानं च।

अयथार्थस्तु अर्थव्यभिचार्यप्रमाणजः। स त्रिविधः संशयस्तर्को विपर्ययश्चेति। संशयतर्कौ वक्ष्येते।

विपर्ययस्तु अतस्मिंस्तद्ग्रहः। भ्रम इति यावत्। यथा पुरोवर्तिन्यरजते शुक्त्यादौ रजतारोप इदं रजतमिति।

स्मरणमपि यथार्थमयथार्थं चेति द्विविधम् । तदुभयं जागरे । स्वप्ने तु सर्वमेव ज्ञानं स्मरणमयथार्थं च । दोषवशेन तदिति स्थान इदमित्युदयात् ।

सर्वं च ज्ञानं निराकारमेव । न तु ज्ञानेऽर्थेन स्वस्याकारो जन्यते साकारज्ञानवादनिराकरणात् । अत एवाकारेणार्थानुमानमपि निरस्तम् । प्रत्यक्षसिद्धत्वाद् घटादेः । सर्वं ज्ञानमर्थनिरूप्यमर्थप्रतिबद्धस्यैव तस्य मनसा निरूपणात् । घटज्ञानवानहमित्येतन्मात्रं गम्यत न तु ज्ञानवानहमित्येतावन्मात्रं ज्ञायते ।

अन्तरिन्द्रियं मनः । तच्चोक्तमेव ।

प्रवृत्तिर्धर्माधर्ममयी यागादिक्रिया तस्या जगद्व्यवहारसाधकत्वात् ।

दोषा रागद्वेषमोहाः । राग इच्छा । द्वेषो मन्युः क्रोध इति यावत् । मोहो मिथ्याज्ञानं विपर्यय इति यावत् ।

पुनरुत्पत्तिः प्रेत्यभावः । स चात्मनः पूर्वदेहनिवृत्तिरपूर्वदेहसङ्घातलाभः ।

फलं पुनर्भोगः सुखदुःखान्यतरसाक्षात्कारः ।

पीडा दुःखम् । तच्चोक्तमेव ।

मोक्षोऽपवर्गः । स चैकविंशतिप्रभेदभिन्नस्य दुःखस्यात्यन्तिकी निवृत्तिः । एकविंशतिप्रभेदास्तु शरीरं षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेति गौणमुख्यभेदात् । सुखं दुःखमेव दुःखानुषङ्गित्वात् । अनुषङ्गोऽविनाभावः । स चायमुपचारो मधुनि विषसंयुक्ते मधुनोऽपि विषपक्षनिक्षेपवत् ।

स पुनरपवर्गः कथं भवति ।

उच्यते । शास्त्राद्विदितसमस्तपदार्थतत्त्वस्य विषयदोषदर्शनेन विरक्तस्य मुमुक्षोर्ध्यायिनो ध्यानपरिपाकवशात् साक्षात्कृतात्मनः क्लेशहीनस्य निष्कामकर्मानुष्ठानादनागतधर्माधर्मावनर्जयतः पूर्वोपात्तं च धर्माधर्मप्रचयं योगर्द्धिप्रभावाद् विदित्वा समाहृत्य भुञ्जानस्य पूर्वकर्मनिवृत्तौ वर्तमानशरीरापगमेऽपूर्वशरीराभावाच्छरीराद्येकविंशतिदुःखसंबन्धो न भवति कारणाभावात् । सोऽयमेकविंशतिप्रभेदभिन्नदुःखहानिर्मोक्षः । सोऽपवर्ग इत्युच्यते ।

## संशयः ।

एकस्मिन् धर्मिणि विरुद्धनानार्थावमर्शः संशयः। स च त्रिविधः। विशेषादर्शने सति समानधर्मदर्शनजो विप्रतिपत्तिजोऽसाधारणधर्मजश्चेति। तत्रैको विशेषादर्शने सति समानधर्मदर्शनजः। यथा स्थाणुर्वा पुरुषो वेति। एकस्मिन्नेव हि पुरोवर्तिनि द्रव्ये स्थाणुत्वनिश्चायकं वक्रकोटरादिकं पुरुषत्वनिश्चायकं च शिरःपाण्यादिकं विशेषमपश्यतः स्थाणुपुरुषयोः समानधर्ममूर्ध्वत्वादिकं च पश्यतः पुरुषस्य भवति संशयः किमयं स्थाणुर्वा पुरुषो वेति। द्वितीयस्तु संशयो विशेषादर्शने सति विप्रतिपत्तिजः। स यथा। शब्दो नित्य उतानित्य इति। तथाह्येको ब्रूते शब्दो नित्य इति। अपरो ब्रूते शब्दोऽनित्य इति। तयोर्विप्रतिपत्त्या मध्यस्थस्य पुंसो विशेषमपश्यतो भवति संशयः किमयं शब्दो नित्य उतानित्य इति। तृतीयोऽसाधारणधर्मजस्तु संशयः। यथा नित्यादनित्याच्च व्यावृत्तेन भूमात्रासाधारणेन गन्धवत्त्वेन विशेषमपश्यतो भुवि नित्यत्वानित्यत्वसंशयः। तथाहि सकलनित्यव्यावृत्तेन गन्धवत्त्वेन योगाद्भूः किमनित्या उत सकलानित्यव्यावृत्तेन तेनैव योगान्नित्येति संशयः।

## प्रयोजनम् ।

येन प्रयुक्तः पुरुषः प्रवर्तते तत् प्रयोजनम्। तच्च सुखदुःखावाप्तिहानी। तदर्था हि प्रवृत्तिः सर्वस्य।

## दृष्टान्तः ।

वादिप्रतिवादिनोः संप्रतिपत्तिविषयोऽर्थो दृष्टान्तः। स द्विविधः। एकः साधर्म्यदृष्टान्तो यथा धूमवत्त्वस्य हेतोर्महानसम्। द्वितीयस्तु वैधर्म्यदृष्टान्तः। यथा तस्यैव हेतोर्महाह्रद इति।

## सिद्धान्तः ।

प्रमाणिकत्वेनाभ्युपगतोऽर्थः सिद्धान्तः। स चतुर्धा सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तभेदात्। तत्र सर्वतन्त्रसिद्धान्तो यथा धर्मिमात्रसद्भावः। द्वितीयो यथा नैयायिकस्य मते मनस इन्द्रियत्वम्। तद्धि समा-

नतन्त्रे वैशेषिके सिद्धम्। तृतीयो यथा क्षित्यादिकर्तृसिद्धौ कर्तुः सर्वज्ञत्वम्। चतुर्थो यथा जैमिनीयस्य नित्यानित्यविचारो यथा भवतु तावच्छब्दो गुण इति।

## अवयवाः।

अनुमानवाक्यस्यैकदेशा अवयवाः। ते च प्रतिज्ञादयः पञ्च। तथा च न्यायसूत्रम्। प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इति। तत्र साध्यधर्मविशिष्टपक्षप्रतिपादकं वचनं प्रतिज्ञा। यथा पर्वतोऽयं वह्निमानिति।

तृतीयान्तं पञ्चम्यन्तं वा लिङ्गप्रतिपादकं वचनं हेतुः। यथा धूमवत्त्वेन धूमवत्त्वादिति वा।

सव्याप्तिकं दृष्टान्तवचनमुदाहरणम्। यथा यो यो धूमवान् सोऽग्निमान् यथा महानस इति।

पक्षे लिङ्गोपसंहारवचनमुपनयः। यथा वह्निव्याप्यधूमवांश्चायमिति तथा चायमिति वा।

पक्षे साध्योपसंहारवचनं निगमनम्। यथा तस्मादग्निमानिति तस्मात्तथेति वा। एते च प्रतिज्ञादयः पञ्चानुमानवाक्यस्यावयवा इव अवयवा न तु समवायिकारणं शब्दस्याकाशसमवेतत्वादिति।

## तर्कः।

तर्कोऽनिष्टप्रसङ्गः। स च सिद्धव्याप्तिकयोर्धर्मयोर्व्याप्याङ्गीकारे अनिष्टव्यापकप्रसञ्जनरूपः। यथा यद्यत्र घटोऽभविष्यत् तर्हि भूतलमिवाद्रक्ष्यतेति। स चायं तर्कः प्रमाणानामनुग्राहकः। तथाहि पर्वतोऽयं साग्निरुतानग्निरितिसंदेहानन्तरं यदि कश्चिन्मन्येतानग्निरयमिति तदा तं प्रति यद्ययमनग्निरभविष्यत् तदानग्नित्वाद्धूमोऽप्ययमभविष्यदित्यधूमवत्त्वप्रसञ्जनं क्रियते। स एष प्रसङ्गस्तर्क इत्युच्यते। अयं चानुमानस्य विषयशोधकः प्रवर्तमानस्य धूमवत्त्वलिङ्गकानुमानस्य विषयमग्निमनुजानाति अनग्निमत्त्वस्य प्रतिक्षेपात्। अतोऽनुमानस्य भवत्यनुग्राहक इति। अ

कश्चिदाह । तर्कः संशय एवान्तर्भवतीति । तन्न । एककोटिविषयत्वात् तर्कस्य ।

### निर्णयः ।

निर्णयोऽवधारणज्ञानम् । तच्च प्रमाणानां फलम् ।

### वादः ।

तत्त्वबुभुत्सोः कथा वादः । स चाष्टनिग्रहाणामधिकरणम् । ते च न्यूनाधिकापसिद्धान्ता हेत्वाभासपञ्चकं चेत्यष्टौ निग्रहाः ।

### जल्पः ।

उभयसाधनवती विजिगीषुकथा जल्पः । स च यथासंभवं सर्वनिग्रहाणामधिकरणम् । परपक्षे दूषिते स्वपक्षस्थापनप्रयोगावसानश्च ।

### वितण्डा ।

स एव स्वपक्षस्थापनाहीनो वितण्डा । सा च परपक्षदूषणमात्रपर्यवसाना । नास्य वैतण्डिकस्य स्थाप्यः पक्षोऽस्ति । कथा तु नानावक्तृकपूर्वोत्तरपक्षप्रतिपादकवाक्यसन्दर्भः ।

### हेत्वाभासाः ।

उक्तानां पक्षधर्मत्वादिरूपाणां मध्ये येन केनापि रूपेण हीना अहेतवः । तेऽपि कतिपयहेतुरूपयोगाद्धेतुवदाभासमाना हेत्वाभासाः । ते चासिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टभेदात् पञ्चैव । अत्रोदयनेन व्याप्तस्य हेतोः पक्षधर्मतया प्रतीतिः सिद्धिस्तदभावोऽसिद्धिरित्यसिद्धिलक्षणमुक्तम् । तच्च यद्यपि विरुद्धादिष्वपि संभवतीति साङ्कर्यं प्रतीयते । तथापि यथा न साङ्कर्यं तथोच्यते । यो हि यत्र साधने पुरः परिस्फुरति समर्थश्च दुष्टज्ञप्तौ स एव दुष्टज्ञाप्तिकारको दूषणमिति यावत् नान्य इति । तेनैव पुरावस्फूर्तिकेन दुष्टौ ज्ञापितायां कथापर्यवसाने जाते तदुपजीविनोऽन्यस्यानुपयोगात् । तथा च सति यत्र विरोधो साध्यविपर्ययव्याप्त्याख्यो दुष्टज्ञप्तिकारकः स एव विरुद्धो हेत्वाभासः । एवं यत्र व्यभिचारादयस्तथाभूतास्तेऽनैकान्तिकादयस्त्रयः । ये पुनर्व्याप्तिपक्षधर्मताविशिष्टहेतुस्वरूपज्ञप्त्यभावेन पूर्वोक्ता असिद्ध्यादयो दुष्टज्ञाप्तिकारका दूषणानीति यावत् । तथाभूतः सोऽसिद्धः ।

स च त्रिविध आश्रयासिद्धस्वरूपासिद्धव्याप्यत्वासिद्धभेदात् । तत्र यस्य हेतोराश्रयो नावगम्यते स आश्रयासिद्धः । यथा गगनारविन्दं सुरभि अरविन्दत्वात् । सरोजारविन्दवत् । अत्र हि गगनारविन्दमाश्रयः स च नास्त्येव । अयमप्याश्रयासिद्धः । तथाहि घटोऽनित्यः कार्यत्वात् पटवदिति ।

नन्वाश्रयस्य घटादेः सत्त्वात् कार्यत्वादिति हेतुर्नाश्रयासिद्धः सिद्धसाधकस्तु स्यात् सिद्धस्य घटानित्यत्वस्य साधनात् । मैवम् । न हि स्वरूपेण कश्चिदाश्रयो भवत्यनुमानस्य किं तु संदिग्धधर्मवत्त्वेन तथा चोक्तं भाष्ये 'नानुपलब्धे न निर्णीतेऽर्थेऽपि तु संदिग्धेऽर्थे न्यायः प्रवर्तते'। न च घटेऽनित्यत्वसंदेहोऽस्ति । अनित्यत्वस्य निश्चितत्वात् । तेन यद्यपि स्वरूपेण घटो विद्यते तथाप्यनित्यत्वसंदेहाभावान्नासावाश्रय इत्याश्रयासिद्धत्वादहेतुः ।

स्वरूपासिद्धस्तु स उच्यते यो हेतुराश्रये नैवावगम्यते । यथा सामान्यमनित्यं कृतकत्वादिति । कृतकत्वं हि हेतुराश्रये सामान्ये नास्त्येव ।❀ भागासिद्धोऽपि स्वरूपासिद्ध एव । यथा पृथिव्यादयश्चत्वारः परमाणवो नित्या गन्धवत्त्वादिति । गन्धवत्त्वं हि पक्षीकृतेषु सर्वेषु नास्ति पृथिवीमात्रवृत्तित्वात् । अत एव भागे स्वरूपासिद्धः ।

तथा विशेषणासिद्धविशेष्यासिद्धासमर्थविशेषणासिद्धासमर्थविशेष्यासिद्धादयः स्वरूपासिद्धभेदा । तत्र विशेषणासिद्धो यथा शब्दो नित्यो द्रव्य

---

❀ एतत् कस्मिंश्चिदेकस्मिन्नेव हस्तलिखितपुस्तके दृश्यते:—भागासिद्धो यथा शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादिति । अत्र शब्दस्यानित्यत्वं साध्यम् प्रयत्नानन्तरीयकत्वादिति हेतुः । स च न सर्वेषां शब्दानाम् । आद्यशब्दे प्रयत्नानन्तरीयकत्वं पुरुषव्यापारेऽस्ति शब्दजनितशब्दे नास्तीति भागासिद्धो हेतुः अथ किमिदं प्रयत्नानन्तरीयकत्वम् । उच्यते । आदावात्ममनःसंयोगस्ततो ज्ञानं ततो विवक्षा ततः प्रयत्नस्ततः कोष्ठगतस्य वायोः पूर्वदेशविभागस्ततो घटादिदेश संयोगस्तत आद्यनिष्पत्तिरिति । अस्यैव प्रयत्नानन्तरीयकत्वमस्ति । अन्येषामाद्य शब्दजनितशब्दानां नास्तीति भागासिद्धो हेतुः आद्ये शब्दे आत्ममनःसंयोगजनित ज्ञानादिक्रमेण प्रयत्नानन्तरीयकत्वं पुरुषव्यापारे वर्तते न तु द्वितीयादिशब्देष्विति हेतोः पक्षैकदेशाव्यावर्तित्वात् ।

त्वे सत्यस्पर्शत्वात् । अत्र हि द्रव्यत्वविशिष्टमस्पर्शत्वं हेतुर्नास्पर्शत्वमात्रम् । शब्दे च द्रव्यत्वं विशेषणं नास्ति गुणत्वादतो विशेषणासिद्धः । न चासति विशेषणे द्रव्यत्वे तद्विशिष्टमस्पर्शत्वमस्ति विशेषणाभावे विशिष्टस्याप्यभावात् । यथा दण्डमात्राभावे पुरुषाभावे वा दण्डविशिष्टस्य पुरुषस्याभावः । तेन सत्यप्यस्पर्शत्वे द्रव्यत्वविशिष्टस्य हेतोरभावात् स्वरूपासिद्धत्वम् । विशेष्यासिद्धो यथा शब्दो नित्योऽस्पर्शत्वे सति द्रव्यत्वादिति । अत्रापि विशिष्टो हेतुः । न च विशेष्याभावे विशिष्टं स्वरूपमस्ति । विशिष्टश्च हेतुर्नास्त्येव । असमर्थविशेषणासिद्धो यथा । शब्दो नित्यो गुणत्वे सत्यकारणकत्वात् । अत्र हि विशेषणस्य गुणत्वस्य न किञ्चित् सामर्थ्यमस्तीति । विशेष्यस्याकारणकत्वस्यैव नित्यत्वसाधने सामर्थ्यात् । अतोऽसमर्थविशेषणता । स्वरूपासिद्धत्वं तु विशेषणाभावे विशिष्टस्याप्यभावात् । ननु विशेषणं गुणत्वं तच्च शब्देऽस्त्येव तत् कथं विशेषणाभावः । सत्यमस्त्येव गुणत्वम् । किं तु न तद्विशेषणम् । तदेव हि हेतोर्विशेषणं भवति यदन्यव्यवच्छेदेन प्रयोजनवत् । गुणत्वं तु निष्प्रयोजनमतोऽसमर्थमित्युक्तमेव । असमर्थविशेष्यो यथा तत्रैव तद्वैपरीत्येन प्रयोगः । तथाहि शब्दो नित्योऽकारणकत्वे सति गुणत्वादिति । अत्र तु विशेषणमात्रस्यैव नित्यत्वसाधने समर्थत्वाद् विशेष्यमसमर्थम् । स्वरूपासिद्धत्वं तु विशेष्याभावे विशिष्टाभावाद् विशिष्टस्य च हेतुत्वेनोपादानात् । शेषं पूर्ववत् ।

व्याप्यत्वासिद्धस्तु स एव यत्र हेतोर्व्याप्तिर्नावगम्यते । स द्विविधः । एकः साध्येनासहचारितोऽपरस्तु सोपाधिकसाध्यसंबन्धी । तत्र प्रथमो यथा यत् सत् तत् क्षणिकं यथा जलधरः संश्च विवादास्पदीभूतः शब्दादिरिति । अत्र हि शब्दादिः पक्षस्तस्य क्षणिकत्वं साध्यं सत्त्वं हेतुः । न चास्य हेतोः क्षणिकत्वेन सह व्याप्तौ प्रमाणमस्ति । इदानीमुपाधिसहितो व्याप्यत्वासिद्धः प्रदर्श्यते । तद्यथा स श्यामो मैत्रीतनयत्वात् परिदृश्यमानमैत्रीतनयस्तोमवदिति । अत्र हि मैत्रीतनयत्वेन श्यामत्वं साध्यते । न च मैत्रीतनयत्वं श्यामत्वे प्रयोजकं किं तु शाकाद्यन्नपरिणाम एवात्र प्रयोजकः । प्रयोजकश्चोपाधिरुच्यते । अतो मैत्रीतनयत्वेन श्यामत्वेन संबन्धे शाकाद्यन्नपरिणाम एवोपाधिः । यथा वा अग्नेर्धूमसंबन्ध आर्द्रेन्धनसंयोगः । अत एवोपाधिसंबन्धाद् व्याप्तिर्नास्तीति व्याप्यत्वासिद्धोऽयं मैत्रीतनयत्वादिर्हेतुः । तथा परोऽ-

पि व्याप्यत्वासिद्धः । यथा क्रत्वन्तर्वर्तिनी हिंसा अधर्मसाधनं हिंसात्वात् क्रतुबाह्यहिंसावदिति । न च हिंसात्वमधर्मे प्रयोजकं किं तु निषिद्धत्वमुपाधिरिति पूर्ववदुपाधिसद्भावाद् व्याप्यत्वासिद्धोऽयं हिंसात्वं हेतुः । ननु साध्यव्यापकत्वे सति साधनाव्यापको यः स उपाधिरित्युपाधिलक्षणम् । तच्च निषिद्धत्वे नास्ति । तत् कथं निषिद्धत्वमुपाधिरिति । मैवम् । निषिद्धत्वेऽप्युपाधिलक्षणस्य विद्यमानत्वात् । तथाहि साध्यस्य अधर्मजनकत्वस्य व्यापकं निषिद्धत्वम् । यत्र यत्राधर्मसाधनत्वं तत्र तत्रावश्यं निषिद्धत्वमिति निषिद्धत्वस्य विद्यमानत्वात् । न च यत्र यत्र हिंसात्वं तत्रतत्रावश्यं निषिद्धत्वं क्रत्वङ्गहिंसायां व्यभिचारात् । अस्ति हि क्रत्वङ्गहिंसायां हिंसात्वं न चात्र निषिद्धत्वमिति तदेवं त्रिविधोऽसिद्धो दर्शितः ।

संप्रति विरुद्धः कथ्यते । साध्यविपर्ययव्याप्तो हेतुर्विरुद्धः । यथा शब्दो नित्यः कृतकत्वादिति । अत्र हि नित्यत्वं साध्यं कृतकत्वं हेतुः । तद्विपर्ययेण चानित्यत्वेन कृतकत्वं व्याप्तं यतो यद्यत् कृतकं तत्तत् खल्वनित्यमेव । अतः साध्यविपर्ययव्याप्तत्वात् कृतकत्वं हेतुर्विरुद्धः ।

साध्यसंशयहेतुरनैकान्तिकः सव्यभिचार इति चोच्यते । स द्विविधः । साधारणानैकान्तिकोऽसाधारणानैकान्तिकश्चेति । तत्र प्रथमः पक्षसपक्षविपक्षवृत्तिः । यथा शब्दो नित्यः प्रमेयत्वादिति । अत्र प्रमेयत्वं हेतुः पक्षे शब्दे सपक्षे नित्ये व्योमादौ विपक्षे चानित्ये घटादौ विद्यते सर्वस्यैव प्रमेयत्वात् । तस्मात् प्रमेयत्वं हेतुः साधारणानैकान्तिकः । असाधारणानैकान्तिकश्च स एव यः सपक्षविपक्षाभ्याम् व्यावृत्तः पक्ष एव वर्तते । यथा भूर्नित्या गन्धवत्त्वादिति । अत्र हि गन्धवत्त्वं हेतुः । स च सपक्षान्नित्याद् व्योमादेर्विपक्षाच्चानित्याज्जलादेर्व्यावृत्तो गन्धवत्त्वस्य पृथिवीमात्रवृत्तित्वादिति । व्यभिचारस्तु लक्ष्यते । संभवत्सपक्षविपक्षस्य हेतोः सपक्षवृत्तित्वे सति विपक्षाद्व्यावृत्तिरेव नियमो गमकत्वात् । तस्य च साध्यविपरीतव्याप्तस्य तन्नियमाभावो व्यभिचारः । स च द्वेधा संभवति सपक्षविपक्षयोर्वृत्तौ ताभ्यां व्यावृत्तौ च ।

यस्य प्रतिपक्षभूतं हेत्वन्तरं विद्यते स प्रकरणसमः । स एव सत्प्रतिपक्ष इति चोच्यते । तद्यथा शब्दोऽनित्यो नित्यधर्मानुपलब्धेः । शब्दो नित्योऽनित्यधर्मानुपलब्धेरिति । अत्र हि साध्यविपरीतसाधकं समानबल-

मनुमानानन्तरं प्रतिपक्ष इत्युच्यते। यः पुनरतुल्यबलो न स प्रतिपक्षः। तथाहि विपरीतसाधकानुमानं त्रिविधं भवति। उपजीव्यमुपजीवकमनुभयं चेति। तत्राद्यं बाधकं बलवत्त्वात्। यथा अनित्यः परमाणुर्मूर्त्तत्वाद् घटवदित्यस्य परमाणुसाधकानुमानं नित्यत्वं साधयदपि न प्रतिपक्षः किं तु बाधकमेवोपजीव्यत्वात् तच्च धर्मिग्राहकत्वात्। न हि प्रमाणेनागृह्यमाणे धर्मिणि परमाणावनित्यत्वानुमानमिदं संभवति आश्रयासिद्धेः। अतोऽनेनानुमानेन परमाणुग्राहकस्य प्रामाण्यमप्यनुज्ञातमन्यथा अस्योदयासंभवात्। तस्मादुपजीव्यं बाधकमेव। उपजीवकं तु दुर्बलत्वाद्बाध्यम्। यथेदमेवानित्यत्वानुमानम्। तृतीयं तु सत्प्रतिपक्षं समबलत्वात्।

यस्य प्रत्यक्षादिप्रमाणेन पक्षे साध्याभावः परिच्छिन्नः स कालात्ययापदिष्टः स एव बाधितविषय इत्युच्यते। यथाग्निरनुष्णः कृतकत्वाज्जलवत्। अत्र कृतकत्वं हेतुः। तस्य च यत् साध्यमनुष्णत्वं तस्याभावः प्रत्यक्षेणैव परिच्छिन्नः त्वगिन्द्रियेणाग्नेरुष्णत्वपरिच्छेदात्। तथा परोऽपि कालात्ययापदिष्टः। यथा घटस्य क्षणिकत्वे साध्ये प्रागुक्तं सत्त्वं हेतुः। तस्यापि च यत् साध्यं क्षणिकत्वं तस्याभावोऽक्षणिकत्वं प्रत्यभिज्ञातर्कादिलक्षणेन प्रत्यक्षेण परिच्छिन्नम्। स एवायं घटो यो मया पूर्वमुपलब्ध इति प्रत्यभिज्ञया पूर्वानुभवजनितसंस्कारसहकृतेन्द्रियप्रभवया पूर्वापरकालाकलनया घटस्य स्थायित्वपरिच्छेदादिति।

एते चासिद्धादयः पञ्च हेत्वाभासा यथाकथञ्चित् पक्षधर्मत्वाद्यन्यतमरूपहीनत्वादहेतवः स्वसाध्यं न साधयन्तीति।

येऽपि लक्षणस्य केवलव्यतिरेकिहेतोस्त्रयो दोषा अव्याप्त्यतिव्याप्त्यसंभवास्तेऽप्यत्रैवान्तर्भवन्ति न तु ते पञ्चभ्योऽधिकाः। तथाहि अतिव्याप्तिर्व्याप्यत्वासिद्धिः विपक्षमात्रादव्यावृत्तत्वात् सोपाधिकत्वाच्च। यथा गोलक्षणस्य पशुत्वस्य। गोत्वे हि सास्नादिमत्त्वम् प्रयोजकं न तु पशुत्वम्। तथा अव्याप्तिर्भागासिद्धत्वम्। यथा गोलक्षणस्य शाबलेयत्वस्य। एवमसंभवोऽपि स्वरूपासिद्धिः। यथा गोलक्षणस्यैकशफत्वस्येति।

## छलम्।

अभिप्रायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरं परिकल्प्य दूषणाभिधानं

छलम् । यथा नवकम्बलोऽयं देवदत्त इति वाक्ये नूतनाभिप्रायेण प्रयुक्तस्य नवशब्दस्यार्थान्तरमाशङ्क्य कश्चिद्दूषयति । नास्य नव कम्बलाः सन्ति दरिद्रत्वात् । न ह्यस्य द्वयमपि संभाव्यते कुतो नवेति । स च वादी छलवादितया ज्ञायते ।

## जातयः ।

असदुत्तरं जातिः । सा चोत्कर्षसमापकर्षसमादिभेदेन बहुविधा। विस्तरभिया नेह कृत्स्नोच्यते । तत्राव्याप्तेन दृष्टान्तगतधर्मेण साध्ये पक्षे अव्यापकधर्मम्यापादनमुत्कर्षसमा जातिः । यथा शब्दोऽनित्यः कृतकत्वाद घटवदित्युक्ते कश्चिदेवमाह यदि कृतकत्वेन हेतुना घटवच्छब्दोऽनित्यः स्यात् तर्हि तेनैव हेतुना तद्वदेव शब्दः सावयवोऽपि स्यात् । अपकर्षसमा तु दृष्टान्तगतेन धर्मेणाव्याप्तेनाव्यापकस्य धर्माभावस्यापादनम् । यथा पूर्वस्मिन प्रयोगे कश्चिदेवमाह यदि कृतकत्वेन हेतुना घटवच्छब्दोऽनित्यः स्यात तेनैव हेतुना घटवदेव हि शब्दः श्रावणोऽपि न स्यात् । न हि घटः श्रावण इति ।

## निग्रहस्थानानि ।

पराजयहेतुर्निग्रहस्थानम् । तच्च न्यूनाधिकापसिद्धान्तार्थान्तराप्रतिभामतानुज्ञाविरोधादिभेदाद्बहुविधमपि विस्तरभयान्नेह कृत्स्नमुच्यते। यद्विवक्षितार्थे कश्चिदूनं तन्न्यूनम् । विवक्षितात् किञ्चिदधिकमधिकम् । सिद्धान्तादपध्वंसोऽपसिद्धान्तः । प्रकृतेनानभिसंबन्धार्थवचनमर्थान्तरम् । उत्तरापरिस्फूर्तिरप्रतिभा । पराभिमतस्यार्थस्य स्वप्रतिकूलस्य स्वयमेवाभ्यनुज्ञानं स्वीकारो मतानुज्ञा । इष्टार्थभङ्गो विरोधः ।

इहात्यन्तमुपयुक्तानां स्वरूपभेदेन भूयो भूयः प्रतिपादनम् । यदनतिप्रयोजनं तदलक्षणमदोषाय । एतावतैव बालव्युत्पत्तिसिद्धेः ।

इति श्रीकेशवमिश्रविरचिता तर्कभाषा समाप्ता ।

# THE ORIENTAL BOOK SUPPLYING AGENCY.

## 15, SHUKRAWAR PETH, POONA CITY.

### OUR OWN PUBLICATIONS—

Rs. A.

1. **C. V. Vaidya**—Mahabharat : a criticism .. .. 2 8
2. ,, History of Mediæval Hindu India .. .. 6 8
3. **Dr. Ghate**—Rig Veda, Lectures .. .. .. 3 0
4. ,, Saptapadarthi (सप्तपदार्थी) with Notes .. 1 8
5. **Dr. Belvalkar**—Systems of Sanskrit Grammar .. 2 0
6. ,, Uttara Ramacharita Sanskrit Text .. 1 4
7. ,, —do— Marathi Translation .. .. 2 0
8. ,, Kavyadarsa (काव्यादर्श) Eng. Trans. .. 1 8
9. ,, ,, Sk. Text. and Trans. .. .. 3 0
10. ,, Bhandarkar Commemoration Vol.
11. ,, Brahmasutra Sankara-bhashya, II, I .. 12&10
    Text with notes and translations .. .. 2
    Do. do. II. ii... .. .. .. 3
12. **K. G. Oka**—अमरकोश with क्षीरस्वामिटीका .. .. 3
13. ,, शाश्वतकोश and रत्नकोश .. .. .. 1
14. **Prof. Pathak**—मेघदूत with Introduction, Notes .. 1
15. **Pathak Shastri**————Kena and Katha Upanishads with Comm. of Sankara, Ramanuja and his own बालबोधिनी .. .. 3
16. **Dr. Karmarkar**—Comparison of the Bhasyas of Sankara, Ramanuja, Kesava Kashmirin and Vallabha, on some Crucial Sutras 1
17. **Dr. Oppert**—Vaijayanti Kosha वैजयन्ती कोश of Yadavaprakasa, Sk.-Eng. Dictionary .. 6 / 10
18. **Dr. Gune**—An Introduction to Comparative Philology .. .. .. .. .. 3
19. धम्मपद—Text, English Translation and Notes .. 2
20. **Dr. Mujumdar**—Corporate Life in Ancient India (2nd edition) .. .. .. .. .. 7 / 3
21. **Prof. Dravid**—Veni-samharam (वेणीसंहारम्) ..
22. **Mm. Abhyankar and Prof. Deodhar** (न्यायसार) with commentary, notes .. .. 2 / 2
23. **Krishna Sastri**—Democratic Hinduism .. .. 4
24. **Prof. Dhruva**—Mudra-Rakshasam (मुद्राराक्षसम्) .. 1
25. **Jha**—Tarkabhasa, English Translation .. 0
26. **Kulkarni**—Tarkabasa Sanskrit Text only ..

